सौभाग्याष्टोत्तरशतनामस्तोत्रम्

दत्तात्रेयेण कृतं सौभाग्याष्टोत्तरशतनामस्तोत्रोपदेशवर्णनम्

निशम्यैतज्जामदग्न्यो माहात्म्यं सर्वतोऽधिकम् ।
स्तोत्रस्य भूयः पप्रच्छ दत्तात्रेयं गुरूत्तमम् ॥ १॥

भगवन् त्वन्मुखाम्भोजनिर्गमद्वाक्सुधारसम् ।
पिबतः श्रोतमुखतो वर्धतेऽनुक्षणं तृषा ॥ २॥

अष्टोत्तरशतं नाम्नां श्रीदेव्या यत्प्रसादतः ।
कामः सम्प्राप्तवान् लोके सौभाग्यं सर्वमोहनम् ॥ ३॥

सौभाग्यविद्यावर्णानामुद्धारो यत्र संस्थितः ।
तत्समाचक्ष्व भगवन् कृपया मयि सेवके ॥ ४॥

निशम्यैवं भार्गवोक्तिं दत्तात्रेयो दयानिधिः ।
प्रोवाच भार्गवं रामं मधुराऽक्षरपूर्वकम् ॥ ५॥

शृणु भार्गव ! यत् पृष्टं नाम्नामष्टोत्तरं शतम् ।
श्रीविद्यावर्णरत्नानां निधानमिव संस्थितम् ॥ ६॥

श्रीदेव्या बहुधा सन्ति नामानि शृणु भार्गव ।
सहस्रशतसंख्यानि पुराणेष्वागमेषु च ॥ ७॥

तेषु सारतमं ह्येतत्सौभाग्याऽष्टोत्तराऽऽत्मकम् ।
यदुवाच शिवः पूर्वं भवान्यै बहुधाऽर्थितः ॥ ८॥

सौभाग्याऽष्टोत्तरशतनामस्तोत्रस्य भार्गव ।
ऋषिरुक्तः शिवश्छन्दोऽनुष्टुप् श्रीललिताऽम्बिका ॥ ९॥

देवता विन्यसेत्कूटत्रयेणाऽऽवर्त्य सर्वतः ।
ध्यात्वा सम्पूज्य मनसा स्तोत्रमेतदुदीरयेत् ॥ १०॥

॥ त्रिपुराम्बिकायै नमः ॥

कामेश्वरी कामशक्तिः कामसौभाग्यदायिनी।
कामरूपा कामकला कामिनी कमलाऽऽसना ॥ ११॥

कमला कल्पनाहीना कमनीयकलावती ।

कमला भारतीसेव्या कल्पिताऽशेषसंसृतिः ॥ १२॥

अनुत्तराऽनघाऽनन्ताऽद्भुतरूपाऽनलोद्भवा ।
अतिलोकचरित्राऽतिसुन्दर्यतिशुभप्रदा ॥ १३॥

अघहन्त्र्यतिविस्ताराऽर्चनतुष्टाऽमितप्रभा ।
एकरूपैकवीरैकनाथैकान्ताऽर्चनप्रिया ॥ १४॥

एकैकभावतुष्टैकरसैकान्तजनप्रिया ।
एधमानप्रभावैधद्भक्तपातकनाशिनी ॥ १५॥

एलामोदमुखैनोऽद्रिशक्रायुधसमस्थितिः ।
ईहाशून्येप्सितेशादिसेव्येशानवराङ्गना ॥ १६॥

ईश्वराऽऽज्ञापिकेकारभाव्येप्सितफलप्रदा ।
ईशानेतिहरेक्षेषदरुणाक्षीश्वरेश्वरी ॥ १७॥

ललिता ललनारूपा लयहीना लसत्तनुः ।
लयसर्वा लयक्षोणिर्लयकर्णी लयात्मिका ॥ १८॥

लघिमा लघुमध्याऽऽढ्या ललमाना लघुद्रुता ।
हयाऽऽरूढा हताऽमित्रा हरकान्ता हरिस्तुता ॥ १९॥

हयग्रीवेष्टदा हालाप्रिया हर्षसमुद्धता ।
हर्षणा हल्लकाभाङ्गी हस्त्यन्तैश्वर्यदायिनी ॥ २०॥

हलहस्ताऽर्चितपदा हविर्दानप्रसादिनी ।
रामरामाऽर्चिता राज्ञी रम्या रवमयी रतिः ॥ २१॥

रक्षिणीरमणीराका रमणीमण्डलप्रिया ।
रक्षिताऽखिललोकेशा रक्षोगणनिषूदिनी ॥ २२॥

अम्बान्तकारिण्यम्भोजप्रियाऽन्तकभयङ्करी ।
अम्बुरूपाऽम्बुजकराऽम्बुजजातवरप्रदा ॥ २३॥

अन्तःपूजाप्रियाऽन्तःस्वरूपिण्यन्तर्वचोमयी ।
अन्तकाऽरातिवामाङ्कस्थिताऽन्तःसुखरूपिणी ॥ २४॥

सर्वज्ञा सर्वगा सारा समा समसुखा सती ।
सन्ततिः सन्तता सोमा सर्वा साङ्ख्या सनातनी ॥ २५॥

॥ फलश्रुतिः॥

एतत्ते कथितं राम नाम्नामष्टोत्तरं शतम् ।
अतिगोप्यमिदं नाम्नः सर्वतः सारमुद्धृतम् ॥ २६॥

एतस्य सदृशं स्तोत्रं त्रिषु लोकेषु दुर्लभम् ।
अप्राकश्यमभक्तानां पुरतो देवताद्विषाम् ॥ २७॥

एतत् सदाशिवो नित्यं पठन्त्यन्ये हरादयः ।
एतत्प्रभावात्कन्दर्पस्त्रैलोक्यं जयति क्षणात् ॥ २८॥

सौभाग्याऽष्टोत्तरशतनामस्तोत्रं मनोहरम् ।
यस्त्रिसन्ध्यं पठेन्नित्यं न तस्य भुवि दुर्लभम् ॥ २९॥

श्रीविद्योपासनवतामेतदावश्यकं मतम् ।
सकृदेतत्प्रपठतां नाऽन्यत्कर्म विलुप्यते ॥ ३०॥

अपठित्वा स्तोत्रमिदं नित्यं नैमित्तिकं कृतम् ।
व्यर्थीभवति नग्नेन कृतं कर्म यथा तथा ॥ ३१॥

सहस्रनामपाठादावशक्तस्त्वेतदीरयेत् ।
सहस्रनामपाठस्य फलं शतगुणं भवेत् ॥ ३२॥

सहस्रधा पठित्वा तु वीक्षणान्नाशयेद्रिपून् ।
करवीररक्तपुष्पैर्हुत्वा लोकान् वशं नयेत् ॥ ३३॥

स्तम्भेयत् श्वेतकुसुमैर्नीलैरुच्चाटयेद्रिपून् ।
मरिचैर्विद्वेषणाय लवङ्गैर्व्याधिनाशने ॥ ३४॥

सुवासिनीर्ब्राह्मणान् वा भोजयेद्यस्तु नामभिः ।
यश्च पुष्पैः फलैर्वापि पूजयेत् प्रतिनामभिः ॥ ३५॥

चक्रराजेऽथवाऽन्यत्र स वसेच्छ्रीपुरे चिरम् ।
यः सदा वर्तयन्नास्ते नामाऽष्टशतमुत्तमम् ॥ ३६॥

तस्य श्रीललिता राज्ञी प्रसन्ना वाञ्छितप्रदा॥